भङ्गी दर्शिता तथैव एकेन्द्रियपृथिव्यादित आरभ्य वैमानिकान्त सर्वदण्डकेषु लेश्यादित आरभ्य अनाकारोपयोगान्त सर्वपदानाश्रित्य सर्वत्र चतुर्भङ्ग्यादि विचारः कर्तव्य इति। विशेषमाह–'जस्स जं अत्थि तं एएणं चेव कमेणं भाणियव्वं' यस्य जीवस्य यत् लेश्यादिकमस्ति विद्यते तस्य तत् लेश्यादिकम् एतेनै-वोपरिदर्शितेनैव प्रकारेण चतुर्भङ्ग्यादिरूपेण भणितव्यं वक्तव्यमिति। कथमिवे-त्याह–'जहा पावेणं दंडओ' यथा पापेन दण्डकः चतुर्भङ्गीकः कृतः, एवम् 'एएणं कमेणं अट्ठसु वि कम्मपगडीसु अट्ठदण्डगा भाणियव्वा जीवादीया वेमाणिय पज्जवसाणा' एतेनोपरिदर्शितेन क्रमेण प्रकारेणाष्टास्वपि कर्मपकृतिषु अष्टौ दण्डका भणितव्या जीवादिका वैमानिकपर्यवसानाः ज्ञानावरणीयाद्यारभ्य अन्त-रायपर्यन्तेषु नारकवदेव जीवादारभ्य वैमानिकपर्यन्तेषु दण्डके निर्यातव्य इति।

एकेन्द्रिय पृथिवी आदिकों से लेकर वैमानिकान्त समस्त दण्डकों में लेश्याआदि से लेकर अनाकारोपयोगान्त तक अपने अपने योग्य सर्व पदों को लेकर सर्वत्र चतुर्भंगी का विचार करना चाहिये। 'जं जस्स अत्थि तं एएणं चेव कमेणं भाणियव्वं' परन्तु इतना ध्यान अवश्य रखना चाहिये कि जिस जीव के जो लेश्यादिक हैं वे उसी जीव के ऊपर में दिखाये गये प्रकार के अनुसार चतुर्भंगी आदि रूप से कहना चाहिये 'जहा पावेणं दंडओ' जैसा पाप के साथ चतुर्भंगी कृत दण्डक कहा गया है वैसा ही दण्डक 'एएणं कमेणं अट्ठसु वि कम्मपगडीसु' इसी क्रम से आठों कर्म प्रकृतियों में भी 'अट्ठदंडगा भाणियव्वा' आठ दण्डक कहना चाहिये–'जीवादीया वेमाणियपज्जवसाणा' अर्थात् जीव से लेकर वैमानिक तक के पदों में ज्ञानावरणीय आदिकर्मों के सम्बन्ध में आठ दण्डक पूर्वोक्त चार भंगोंवाला बना-बना कर कहना चाहिये,

કાયિકોથી આરંભીને વૈમાનિકો સુધી સઘળા દંડકોમાં લેશ્યા વિગેરે ને લઇને અનાકારોપયોગ સુધીના પદોને લઈને બધે જ ચાર ભંગાત્મક વિચાર સમજવો.

'जं जस्स अत्थि तं एएणं चेव कमेणं भाणियव्वं' પરંતુ એ ખ્યાલ અવશ્ય રાખવો જોઇએ કે–જે જીવને જે લેશ્યા વિગેરે કહ્યા છે. તે જીવને તે લેશ્યા વિગેરે ઉપર બતાવેલા પ્રકાર પ્રમાણે ચાર ભંગ પણાથી કહેવા જોઈએ. 'जहा पावेणं दंडओ' જે પ્રમાણે પાપકર્મના સંબંધમાં ચતુર્ભંગા-ત્મક દંડકો કહ્યા છે, એજ પ્રમાણેના દંડકો 'एएणं कमेणं अट्ठसु वि कम्मपगडीसु' આજ ક્રમથી આઠે કર્મપ્રકૃતિયોમાં પણ 'अट्ठदंडगा भाणियव्वा' આઠ દંડકો કહેવા જોઇએ 'जीवादीया वेमाणियपज्जवसाणा' જીવથી આરંભીને વૈમાનિક સુધીના પદોમાં જ્ઞાનાવરણીય વિગેરે કર્મોના સંબંધમાં પૂર્વોક્ત ચાર ભંગો

'एसो नवदण्डगसंगहिओ पढमो उद्देसो भाणियव्वो' एषः नवदण्डकसंगृहीतः प्रथमोदेशको भणितव्य इति। 'सेवं भंते! सेवं भंते! त्ति' तदेवं भदन्त! तदेवं भदन्त! इति, हे भदन्त! अनेके जीवाः पापकर्मणामुपभोगं तत्समाप्तिं च सहैव-एककाले एव कुर्वन्तीत्यादिकं यद् देवानुप्रियेण कथितं तत्सर्वम् एवमेव सर्वथा सत्यमेवेति कथयित्वा गौतमो भगवन्तं वन्दते नमस्यति वन्दित्वा नमस्यित्वा च संयमेन तपसा आत्मानं भावयन् विहरतीति ॥सू० १॥

इति श्री विश्वविख्यात जगद्वल्लभादिपदभूषित बालब्रह्मचारि 'जैनाचार्य' पदभूषित पूज्यश्री 'घासीलाल' व्रतिविरचितायां श्री "भगवती" सूत्रस्य प्रमेयचन्द्रिका ख्यायां व्याख्यायां एकोनत्रिंशत्तमे शतके प्रथमोदेशकः समाप्तः ॥२९-१॥

---

'एसो नव दंडगसंगहिओ पढमो उद्देसो भाणियव्वो' इस प्रकार से नव दण्डक सहित यह प्रथम उद्देशक कहने के योग्य हैं।

'सेवं भंते! सेवं भंते! त्ति' हे भदन्त! अनेक जीव पापकर्मों का उपभोग और उनका विनाश एक काल में ही करते हैं इत्यादि विषय जो आप देवानुप्रियने कहा है-वह सब सर्वथा सत्य ही है। इस प्रकार कहकर गौतमस्वामीने प्रभुश्री को वन्दना की-नमस्कार किया, वन्दना नमस्कार कर फिर वे संयम और तप से आत्मा को भावित करते हुए अपने स्थान पर विराजमान हो गये ॥सू०१॥

जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलालजीमहाराजकृत "भगवतीसूत्र" की प्रमेयचन्द्रिका व्याख्याके उनतीसवें शतकका ॥ प्रथम उद्देशक समाप्त ॥ २९-१॥

---

વાળા આઠ દંડકો બનાવીને તે કહેવા જોઈએ 'एसो नव दंडगसंगहिओ पढमो उद्देसो भाणियव्वो' આ પ્રમાણે નવ દંડકો સહિત આ પહેલો ઉદ્દેશો કહેવો જોઈએ.

'सेवं भंते! सेवं भंते! त्ति' હે ભગવન્ અનેક જીવો પાપકર્મનો ઉપભોગ અને તેનો ક્ષય એક કાળમાંજ કરે છે. ઈત્યાદિ વિષયમાં આપ દેવાનુપ્રિયે જે કથન કર્યું છે, તે સઘળું કથન સર્વથા સત્ય છે. હે ભગવન્ આપ દેવાનુપ્રિયનું કથન આપ્ત હોવાથી સર્વથા સત્ય જ છે, આ પ્રમાણે કહીને ગૌતમસ્વામીએ પ્રભુશ્રીને વંદના કરી તેઓને નમસ્કાર કર્યા વંદના નમસ્કાર કરીને તે પછી સંયમ અને તપથી પોતાના આત્માને ભાવિત કરતા થકા પોતાના સ્થાન પર બિરાજ માન થયા ॥સૂ૦૧॥

જૈનાચાર્ય જૈનધર્મદિવાકર પૂજ્ય શ્રી ઘાસીલાલજી મહારાજકૃત 'ભગવતીસૂત્ર'ની પ્રમેયચન્દ્રિકા વ્યાખ્યાના ઓગણત્રીસમા શતકનો પહેલો ઉદ્દેશો સમાપ્ત ॥૨૯-૧॥

अथ द्वितीयोद्देशकः प्रारभ्यते-

अनेकेषां जीवानामेकस्मिन् काले कर्मभोगस्तत्परिसमाप्तिश्च भवतीति प्रथमोद्देशके प्रदर्शितं द्वितीये तु अनन्तरोपपन्नकानां नारकादीनां तद्दर्शयिष्यति तदनेन सम्बन्धेन आयातस्य द्वितीयोद्देशकस्येदं सूत्रम्-'अणंतरोववन्नगाणं' इत्यादि।

मूलम्-अणंतरोववन्नगाणं भंते! नेरइया पावं कम्मं किं समायं पट्ठविंसु समायं निट्ठविंसु पुच्छा, गोयमा! अत्थेगइया समायं पट्ठविंसु समायं निट्ठविंसु१, अत्थेगइया समायं पट्ठविंसु विसमायं निट्ठविंसु२। से केणट्ठेणं भंते! एवं वुच्चइ अत्थेगइया समायं पट्ठविंसु तं चेव, गोयमा! अणंतरोववन्नगा नेरइया दुविहा पन्नत्ता तं जहा-अत्थेगइया समाउया समोववन्नगा१, अत्थेगइया समाउया विसमोववन्नगा२। तत्थ णं जे ते समाउया समोववन्नगा तेणं पावं कम्मं समायं पट्ठविंसु समायं निट्ठविंसु१, तत्थ णं जे ते समाउया विसमोववन्नगा, तेणं पावं कम्मं समायं पट्ठविंसु विसमायं निट्ठविंसु२ से तेणट्ठेणं तं चेव। सलेस्सा णं भंते! अणंतरोववण्णगा नेरइया पावं कम्मं एवं चेव। एवं जाव अणागारोवउत्ता। एवं असुरकुमाराणं एवं जाव वेमाणियाणं। नवरं जं जस्स अत्थि तं तस्स भाणियव्वं। एवं नाणावरणिज्जेणं वि दंडओ, एवं निरवसेसं जाव अंतराइएणं सेवं भंते! सेवं भंते! त्ति जाव विहरइ ॥सू० १॥

एगूणतिसइमे सए बीओ उद्देसो समत्तो ॥२९-२॥

छाया—अनन्तरोपपन्नकाः खलु भदन्त! नैरयिकाः पापं कर्म किं समकं प्रास्थापयन् समकं न्यस्थापयन् पृच्छा, गौतम! अस्त्येकके समकं प्रास्थापयन् समकं न्यस्थापयन्१, अस्त्येकके समकं प्रास्थापयन् विषमकं न्यस्थापयन्२। तत्केनार्थेन भदन्त! एवमुच्यते अस्त्येकके समकं प्रास्थापयन् तदेव गौतम! अनन्तरोपपन्नका नैरयिका द्विविधाः प्रज्ञप्ताः तद्यथा-अस्त्येकके समायुष्काः समोपपन्नकाः१, अस्त्येकके समायुष्का विषमोपपन्नकाः २। तत्र खलु ये ते

समायुष्काः समोपपन्नकाः ते खलु पापं कर्म समकं प्रास्थापयन्, समकं न्यस्थापयन् १, तत्र खलु ये ते समायुष्का विषमोपपन्नका स्ते खलु पापं कर्म समकं प्रास्थापयन् विषमकं न्यस्थापयन् तत् तेनार्थेन तदेव । सलेश्याः खलु भदन्त ! अनन्तरोपपन्नका नैरयिकाः पापं० एवमेव एवं यावदनाकारोपयुक्ताः एवमसुरकुमाराः । एवं यावद् वैमानिकाः । नवरं यत् यस्यास्ति तत् तस्य भणितव्यम् । एवं ज्ञानावरणीयेनापि दण्डकः । एवं यावत् निरवशेषं यावदन्तरायिकेन । तदेवं भदन्त ! तदेवं भदन्त ! इति यावद्विहरति ॥सू० १॥

एकोनत्रिंशत्तमे शतके द्वितीयोद्देशकः समाप्तः ॥२९-२॥

टीका—'अणंतरोववन्नगा णं भंते ! नेरइया' अनन्तरोपपन्नकाः-प्रथमसमये उत्पत्तिमन्तः खलु नैरयिकाः 'पावं कम्मं किं समायं पट्ठविंसु समाय निट्ठविंसु' पापं कर्म समकं प्रास्थापयन्-प्रस्थापितवन्तः समकं-समकालमेव न्यस्थापयन्-निष्ठापित-

दूसरा उद्देशका का प्रारंभ

अनेक जीवों का एक काल में भी कर्मभोग होता है और कर्म से मुक्त होते हैं इत्यादि विषय प्रथम उद्देशक में प्रकट करने में आया है- अब इस क्रमप्राप्त द्वितीय उद्देशे में अनन्तरोपपन्नक नैरयिकादिकों के विषय में भी यही बात प्रकट की जावेगी-इसी सम्बन्ध को लेकर सूत्रकार ने यह द्वितीय उद्देशक प्रारम्भ किया है-

'अणंतरोववन्नगाणं भंते ! नेरइया पावं कम्मं किं समायं'-इत्यादि

टीकार्थ—गौतमस्वामीने प्रभुश्री से ऐसा पूछा है कि 'अणंतरोववन्नगाणं भंते ! नेरइया०' हे भदन्त ! जो अनन्तरोपपन्नक नैरयिक हैं वे क्या एक साथ ही पापकर्म को भोगना प्रारम्भ करते हैं ? अर्थात्

બીજા ઉદ્દેશાનો પ્રારંભ—

અનેક જીવોનો એક કાળમાં કર્મભોગ થાય છે, અને કર્મથી મુક્ત થાય છે વિગેરે વિષય પહેલા ઉદ્દેશામાં પ્રગટ કરવામાં આવ્યો છે. હવે આ ક્રમ પ્રાપ્ત બીજા ઉદ્દેશામાં અનંતરોપપન્નક નૈરયિકો વિગેરેના સંબંધમા પણ એજ હકીકત કહેવામાં આવે છે. એ સંબંધ ને લઈને સૂત્રકારે આ બીજા ઉદ્દેશાનો પ્રારંભ કરેલ છે —'अणंतरोववन्नगाणं भंते ! नेरइया पावं कम्मं किं समायं' ઈત્યાદિ

ટીકાર્થ—ગૌતમસ્વામીએ પ્રભુશ્રીને એવું પૂછયું છે કે—'अणंतरोववन्नगाणं भंते नेरइया' હે ભગવન્ અનંતરોપપન્નક જે નૈરયિકો છે, તેઓ એક સમયમાં એક સાથે જ પાપકર્મ ભોગવવાનો પ્રારંભ કરે છે ? અર્થાત્ ભોગવે છે ? અને

वन्तः१, अथवा समकं प्रास्थापयन्-प्रस्थापितवन्तः विषमकं-विषमतया न्यस्थापयन् निष्ठापितवन्तः२, 'पुच्छा' पृच्छा-प्रश्न, अनेन संग्राहपदी यथा-अथवा विषमकं-विषमतया-प्रास्थापयन् समकं न्यस्थापयन्३, अथवा विषमकं प्रास्थापयन् विषमकं न्यस्थापयन् इति। भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम! 'अत्थेगइया समायं पट्ठविंसु समायं निट्ठविंसु' अस्त्येकके अनन्तरोपपन्नका जीवाः समकं प्रास्थापयन् समकं न्यस्थापयन् १, अथवा जीवा अनन्तरोपपन्नकाः युगपदेव प्रथमतया पापं कर्म वेदयितुमारब्धवन्त स्तथा युगपदेव निष्ठां नीतवन्तः इति प्रथमभङ्गः१, तथा-'अत्थेगइया समायं पट्ठविंसु विसमायं निट्ठविंसु' समकं प्रास्थापयन् तथा विषमं यथा भवति तथा विषमतया न्यस्थापयन्

---

भोगते हैं? और एक साथ ही उसका विनाश करते हैं १। (प्रथम समय में उत्पन्नेवाले जो नैरयिक हैं वे अनन्तरोपपन्नक नैरयिक हैं) अथवा वे पापकर्म का भोगना साथ-साथ प्रारम्भ करते हैं और विनाश भिन्न-भिन्न समय में करते हैं? अथवा-पापकर्मका भोगने का प्रारंभ भिन्न-भिन्न समय में करते हैं और विनाश एक साथ करते हैं?३ अथवा-पापकर्मका भोगना भी भिन्न-भिन्न समय में करते हैं और विनाश भी भिन्न-भिन्न समय में करते हैं?४ इसके उत्तर में प्रभुश्री उनसे कहते हैं-'गोयमा!' हे गौतम! 'अत्थेगइया समायं पट्ठविंसु समायं निट्ठविंसु' कितनेक अनन्तरोपपन्नक नैरयिक ऐसे हैं जो एक साथ ही पापकर्म का भोगना प्रारंभ करते हैं और एक साथ ही उसका विनाश करते हैं१ तथा-'अत्थेगइया समायं पट्ठविंसु विसमायं निट्ठविंसु'

---

એક સાથે જ તેનો ક્ષય કરે છે? પ્રથમ સમયમાં ઉત્પત્તિવાળા જે નૈરયિકો છે, તે અનંતરોપપન્નક નૈરયિક કહેવાય છે. અથવા-તેઓ પાપકર્મ ભોગવવાનું એક સાથે કરે છે? અથવા-પાપકર્મ ભોગવવાનું એક સાથે કરે છે? અને તેનો ક્ષય જુદા જુદા સમયમાં કરે છે? ૨ અથવા-પાપકર્મ ભોગવવાનું જુદા જુદા સમયે કરે છે? અને તેનો વિનાશ એક સાથે કરે છે? ૩ અથવા પાપકર્મ ભોગવવાનું પણ જુદા જુદા સમયમાં કરે છે? અને તેનો વિનાશ પણ જુદા જુદા સમયે કરે છે? આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી ગૌતમસ્વામીને કહે છે કે-'ગોયમા' હે ગૌતમ! 'अत्थेगइया समायं पट्ठविंसु समायं निट्ठविंसु' કેટલાક અનંતરોપપન્નક નૈરયિકો એવા હોય છે કે-જેઓ એક સાથે જ પાપકર્મ ભોગવવાનો પ્રારંભ કરે છે, અને તેનો ક્ષય-વિનાશ પણ એક સાથે જ કરે છે. ૧ તથા 'अत्थेगइया समायं पट्ठविंसु विसमायं निट्ठविंसु' કેટલાક અનંતરોપપન્નક

एकसमये एव जायमानत्वात् भङ्गद्वयमेव भवति । अनन्तरोपपन्नत्वेन तृतीयचतुर्थयोर्भङ्गयोरभाव इति । पुनः प्रश्नयन्नाह-'से केणट्ठेणं' इत्यादि, 'से केणट्ठेणं भंते ! एवं वुच्चइ अत्थेगइया समायं पट्ठविंसु-तं चेव' तत् केनार्थेन भदन्त ! एवमुच्यते यत् अस्त्येकके समकं प्रास्थापयन् समकमेव न्यस्थापयन् तदेवेति तथा समकं प्रास्थापयन् विषमकं न्यस्थापयन् इत्यत्रान्तरप्रश्नः, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'अणंतरोववन्नगा नेरइया दुविहा पन्नत्ता' अनन्तरोपपन्नका नैरयिका द्विविधाः-द्विप्रकारकाः प्रज्ञप्ताः-कथिताः 'तं जहा' तद्यथा 'समाउया समोववन्नगा' समायुष स्तुल्यायुष्कवन्तः अनन्तरोपपन्नकानां

कितनेक अनन्तरोपपन्नक नैरयिक ऐसे हैं-जो एक साथ तो पापकर्मका भोगना प्रारंभ करते हैं पर उसका विनाश एक साथ नहीं करते-भिन्न-भिन्न समय में करते है, यहां ये दो ही भंग होते हैं, क्योंकि अनन्तरोपपन्नक जीवों में तृतीय और चतुर्थ ये दो भंग नहीं होते हैं।

'से केणट्ठेणं भंते ! एवं वुच्चइ, अत्थेगइया समायं पट्ठविंसु तं चेव' हे भदन्त ऐसा आप किस कारण से कहते हैं कि कितनेक अनन्तरोपपन्नक नैरयिक जीव ऐसे होते हैं कि एक साथ पापकर्म को भोगना प्रारंभ करते हैं और एक साथ ही उसका विनाश करते हैं ? तथा कितनेक अनन्तरोपपन्नक नैरयिक ऐसे होते हैं जो एक साथ तो पापकर्म का भोगना प्रारंभ करते हैं पर भिन्न भिन्न समय में उसका विनाश करते हैं ? इसके उत्तर में प्रभुश्री कहते हैं-'गोयमा !' अणंतरोववन्नगा नेरइया दुविहा पन्नत्ता' हे गौतम ! अनन्तरोपपन्नक

નૈરયિકો એવા હોય છે કે-જેઓ પાપકર્મ ભોગવવાનો પ્રારંભ તો એક સાથે જ કરે છે, પરંતુ તેનો ક્ષય વિનાશ એક સાથે કરતા નથી. અર્થાત્ જુદા જુદા સમયે તેનો ક્ષય કરે છે. અહિયાં આ બીજ ભંગો કહ્યા છે. કેમકે-અનંતરોપપન્નક જીવોમાં ત્રીજો અને ચોથો એ બે ભંગો હોતા નથી.

से केणट्ठेणं भंते ! 'एवं वुच्चइ. अत्थेगइया समायं पट्ठविंसु तं चेव, હે ભગવન્ આપ એવું શા કારણથી કહો છો ? કે કેટલાક અનંતરોપપન્નક નૈરયિક જીવો એવા હોય છે કે જેઓ એક સાથે પાપકર્મ ભોગવવાનો પ્રારંભ કરે છે, અને એકી સાથે જ તેનો ક્ષય કરે છે ૧ તથા કેટલાક અનંતરોપપન્નક નૈરયિક જીવો એવા હોય છે કે જેઓ પાપકર્મ ભોગવવાનો પ્રારંભતો એક સાથે કરે છે. પરંતુ તેનો વિનાશ જુદા જુદા સમયે કરે છે ? આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી કહે છે કે-'गोयमा ! अणतरोववन्नगा नेरइया दुविहा पन्नत्ता' હે ગૌતમ ! અનંતરોપપન્નક નૈરયિક

समा एवायुरुदयो भवति आयुषो वैषम्ये अनन्तरोपपन्नत्वमेव न स्यात्, आयुः प्रथमसमयवर्त्तित्वा तेषां समोपपन्नकाः मरणानन्तरं परभवोत्पत्तिमाश्रित्य ते च मरणकाले भूतपूर्वगतया अनन्तरोपपन्नकाः कथ्यन्ते इति। 'अत्थेगइया समाउया विसमोववन्नगा' अस्त्येकके समायुषो विषमोपपन्नकाः विषमोपपन्नकत्वम् अत्रापि संभवति, मरणवैषम्यादिति। अनन्तरोपपन्नकेषु तृतीयचतुर्थभङ्गौ न संभवतोऽतोऽत्र तृतीयचतुर्थौ न दर्शितौ अनन्तरोपपन्नत्वादेवेति। 'तत्थ णं जे ते समाउया समोववन्नगा' तत्र तयो द्वयोरनन्तरोपपन्नकयोर्मध्ये ये अनन्तरोपपन्ननारकाः समायुषः समोपपन्नकाश्च 'तेणं पावं कम्म समायं पट्टविसु

नैरयिक दो प्रकार के होते हैं-'तं जहा' जैसे कि-'समाउया समोववन्नगा' एक वे जो तुल्य आयुवाले हो और समानकाल में परभव में उत्पन्न हुए हैं १तथा-द्वितीय वे-जो समकाल में आयुष के उदयवाले हों और परभव में भिन्न-भिन्न समय में उदय हुए हों २ अनन्तरोपपन्नक जीवों की आयुका उदय समान ही होता है। आयुकी विषमता में उनमें अनन्तरोपपन्नता ही नहीं बनती है। ये सब समोपपन्नक आयुके प्रथम समयवर्ती होते हैं। तथा ये समोपपन्नक इसलिये कहे गये हैं कि ये मरण के अनन्तर ही परभव में उत्पन्न हो जाते हैं। इसलिये ये मरणकाल में भूतपूर्व गति से अनन्तरोपपन्नक कहलाते हैं। तथा द्वितीय भंग में मरण की विषमता से इनमें विषमोपपन्नकता कही गई है। यहां आदि के ये दो भंग ही संभवित हैं-तृतीय चतुर्थ नहीं। इसलिये वे यहां प्रकट नहीं किये गये हैं। 'तत्थ णं

બે પ્રકારના હોય છે, 'तं जहा' તે આ પ્રમાણે છે. 'समाउया समोववन्नगा' એક એ કે જેઓ સમાન આયુવાળા હોય છે, અને સમાન કાળમાં પરભવમાં ઉત્પન્ન થયા હોય ૧ તથા--બીજા એ કે જેઓ સમાન કાળમાં આયુના ઉદયવાળા થયા હોય ૨ અનંતરોપપન્નક જીવોના આયુષ્યનો ઉદય સમાન જ હોય છે. આયુના વિષમપણામાં તેઓમાં અનંતરોપપન્નકપણું જ બનતું નથી. તેઓ બધા સમોપપન્નક આયુના પ્રથમ સમયમાં રહેનારા હોય છે. તથા તેઓને સમોપપન્નક એ માટે કહ્યા છે કે-તેઓ મરણ પછી જ પરભવમા ઉત્પન્ન થઈ જાય છે. તેથી તેઓ મરણ કાળમાં ભૂતપૂર્વ ગતિથી અનંતરોપપન્નક કહેવડાવે છે. તથ બીજા ભંગમાં મરણના વિષમપણાથી તેઓમાં વિષમોપપન્નકપણું કહેલ છે. અહિયાં પહેલો અને બીજો એ બે ભંગો જ સંભવિત કહ્યા છે. ત્રીજો અને ચોથો એ ભંગો તેઓને હોતા નથી. તેથી તે બે ભંગો અહીં કહ્યા નથી. 'तत्थ णं जे ते समाउया समोववन्नगा'

समायं निट्ठविंसु' ते अनन्तरोपपन्नकाः खलु नारकाः पापम्-अशुभं कर्म समकमेव प्रास्थापयन् समकमेव न्यस्थापयन् चेति । 'तत्थ णं जे ते समाउया विसमोववन्नगा' तत्र द्वयोर्मध्ये खलु ये नारकाः समायुषो विषमोपपन्नकाः 'तेणं पावं कम्मं समायं पट्ठविंसु विसमायं निट्ठविंसु' ते खलु पापं कर्म समकमेव प्रास्थापयन् विषमकं-विषमतया न्यस्थापयन् इति 'से तेणट्ठेणं तं चेव' तत्तेनार्थेन हे गौतम ! एवमुच्यते अस्त्येकके समकं प्रास्थापयन् समकं न्यस्थापयन्, अस्त्येकके समकं प्रास्थापयन् विषमकं न्यस्थापयन्, इति । 'सलेस्सा णं भंते ! अणंतरोववन्नगा नेरइया पावं०' सलेश्याः खलु भदन्त ! अनन्तरोपपन्नका नारकाः समकं प्रास्थापयन् समकमेव न्यस्थापयन्, अथवा समकमेव प्रास्थापयन् विषमकं

---

जे ते समाउया समोववन्नगा' इनमें जो अनन्तरोपपन्ननारक समान आयुवाले और समोपपन्नक हैं 'तेणं पावं कम्मं समायं पट्ठविंसु समायं निट्ठविंसु' वे पापकर्म का भोगना एक साथ प्रारम्भ करते हैं और एक साथ उनका विनाश करते हैं । तथा-'तत्थ णं जे ते समाउया विसमोववन्नगा-तेणं पावं कम्मं समायं पट्ठविंसु विसमायं निट्ठविंसु' जो अनन्तरोपपन्ननारक समान आयुवाले होते हुए भी भिन्न-भिन्न समय में परभव में उत्पत्तिवाले हैं-वे पापकर्म को एक साथ तो भोगते हैं पर उसका विनाश वे भिन्न-भिन्न समय में करते हैं 'से तेणट्ठेणं तं चेव' इसलिये हे गौतम ! मैंने ऐसा कहा है कि कितनेक अनन्तःपरोपपन्नक नैरयिक जीव ऐसे होते हैं जो पापकर्म का भोगना साथ-साथ प्रारम्भ करते हैं और साथ-साथ-उसका विनाश करते हैं इत्यादि, 'सलेस्साणं भंते ! अणंतरोववन्नगा नेरइया पावं' हे भदन्त !

---

આમાં જે અનંતરોપપન્નક નારક સમાન આયુવાળા અને સમાન કાળમાં ઉત્પન્ન થવાવાળા હોય છે, 'पावं कम्म समायं पट्ठविंसु समायं निट्ठविंसु' તેઓ પાપકર્મ ભોગવવાનું એક સાથે જ કરે છે, અને તેનો વિનાશ પણ એક સાથે જ કરે છે. તથા 'तत्थ णं जे ते समाउया विसमोववन्नगा तेणं पावं कम्मं समायं पट्ठविंसु विसमायं निट्ठविंसु' જે અનંતરોપપન્નક નારક સમાન આયુવાળા હોવા છતાં પણ જુદા જુદા સમયમાં પરભવમાં ઉત્પન્ન થવાવાળા હોય છે, તેઓ એક સાથે પાપકર્મને ભોગવે તો છે, પરંતુ તેનો વિનાશ જુદા જુદા સમયે કરે છે, 'से तेण ट्ठेणं तं चेव' તેથી હે ગૌતમ ! મેં એવું કહ્યું છે કે-કેટલાક અનંતરોપપન્નક નૈરયિક જીવો એવા હોય છે કે-જેઓ એક સાથે પાપકર્મને ભોગવે છે, અને એકી સાથે તેનો વિનાશ કરે છે, ઈત્યાદિ

'सलेस्साणं भंते ! अणंतरोववन्नगा ! नेरइया पाव' હે ભગવન્ જેઓ લેશ્યાવાળા અનંતરોપપન્નક નૈરયિક છે તેઓ પાપકર્મ ભોગવવાનો પ્રારંભ

न्यस्थापयन् इत्यादि क्रमेण चतुर्भङ्गकः प्रश्नः, उत्तरमाह–'एवं चेव त्ति' एवमेव यथैवानन्तरोपपन्नकनारकाणां द्विभङ्गकमेवोत्तरम् तथैव सलेश्यानन्तरोपपन्नकेऽपि द्विभङ्गकमेवोत्तरम्, अस्त्येकके समकं प्रास्थापयन् समकं न्यस्थापयन् तथा–केचन सलेश्यानन्तरोपपन्ननारकाः समकं प्रास्थापयन विषमकं न्यस्थापयन इति। तत्केनार्थेन भदन्त! एवमुच्यते सलेश्या अनन्तरोपपन्नका नारकाः केचन समकं प्रास्थापयन् समकं न्यस्थापयन् केचन तथाविधा नारकाः समकमेव प्रास्थापयन् विषमकं न्यस्थापयन् गौतम! सलेश्या अनन्तरोपपन्ननारका द्विप्रकारका भवन्ति

जो सलेश्य अनन्तरोपपन्नक नैरयिक हैं वे पापकर्म को एक साथ भोगना प्रारम्भ करते हैं और एक साथ ही उसका विनाश करते हैं क्या? अथवा–एक साथ पापकर्म का भोगना प्रारम्भ करते हैं और विनाश उसका भिन्न–भिन्न समय में करते हैं क्या? इत्यादि रूप से यहां चार भंगोवाला प्रश्न गौतमस्वामी की तरफ से उपस्थित किया गया है। इसके उत्तर में प्रभुश्री कहते हैं–'एवं चेव त्ति' हे गौतम! जिस प्रकारका उत्तर दो भंगो को लेकर अनन्तरोपपन्नक नैरयिकों के प्रकरण में दिया गया है–ठीक वैसा ही उत्तर आदि के दो भंगों को लेकर यहां पर भी समझना चाहिये, इस प्रकार कितनेक सलेश्य अनन्तरोपपन्नक नैरयिक ऐसे होते हैं जो एक साथ पापकर्म का भोगना प्रारम्भ करते हैं और एक साथ ही उसका विनाश करते हैं–तथा कितनेक सलेश्य अनन्तरोपपन्नक नैरयिक ऐसे होते हैं जो पापकर्म का भोगना एक साथ तो प्रारम्भ करते हैं पर उसका विनाश भिन्न भिन्न काल में करते हैं।

એક સાથે કરે છે? અને તેનો વિનાશ પણ એક સાથે જ કરે છે? અથવા–એક સાથે પાપકર્મ ભોગવવાનો પ્રારંભ કરે છે? અને તેનો વિનાશ જુદા જુદા સમયે કરે છે? વિગેરે પ્રકારથી અહિયાં ચાર ભંગોવાળો પ્રશ્ન ગૌતમ સ્વામીએ પૂછેલ છે, આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી કહે છે કે–'एवं चेव त्ति' હે ગૌતમ! જે પ્રમાણેનો ઉત્તર બંને ભંગોના સંબંધમાં અનંતરોપપન્નક નૈરયિકોના પ્રકરણમાં આપેલ છે, એજ પ્રમાણેનો ઉત્તર પહેલો અને બીજો એ બે ભંગોને લઈને અહિયાં પણ સમજી લેવા, આ રીતે કેટલાક લેશ્યાવાળા અનંતરોપપન્નક નૈરયિકો એવા હોય છે કે–એક સાથે પાપકર્મ ભોગવવાનો આરંભ કરે છે. અને એકી સાથે જ તેનો ક્ષય વિનાશ કરે છે. તથા–કેટલાક લેશ્યાવાળા અનંતરોપપન્નક નૈરયિકો એવા હોય છે, કે જેઓ પાપકર્મ ભોગવવાનો આરંભ એક સાથે કરે છે. પરંતુ તેનો ક્ષય વિનાશ જુદા જુદા કાળમાં કરે છે, હે ભગવાન્ આપ એવું શા કારણથી

केचन समायुषः समोपपन्नकाः केचन समायुषो विषमोपपन्नकाः तत्र ये ते समायुषः समोपपन्नका स्ते पापं कर्म समकं प्रास्थापयन समकं न्यस्थापयन् तथा तत्र खलु ये ते समायुषो विषमोपपन्नका स्ते समकं प्रास्थापयन् विषमकं न्यस्थापयन्, एतेन कारणेन कथयामि यत् सलेश्यानन्तरोपपन्ननारकाः समकं

हे भदन्त ! ऐसा आप किस कारण से कहते हैं कि जो सलेश्य अनन्तरोपपन्नक नैरयिक हैं उनमें से कितनेक सलेश्य अनन्तरोपपन्न नैरयिक पापकर्म का भोगना एक साथ प्रारम्भ करते हैं और एक साथ उसका विनाश करते हैं ? तथा–कितनेक अनन्तरोपपन्न नैरयिक पाप· कर्म का भोगना एक साथ तो प्रारम्भ करते हैं पर उसका विनाश वे भिन्न२ काल में करते हैं ? इस प्रश्न के उत्तर में प्रभुश्री उनसे कहते हैं–हे गौतम ! सलेश्य अनन्तरोपपन्न नैरयिक दो प्रकार के होते हैं–कितनेक समान आयुवाले समोपपन्नक और कितनेक समान आयुवाले विषमोपपन्नक, इनमें जो प्रथम प्रकार के सलेश्य अनन्तरोपपन्न नैरयिक हैं वे पापकर्म का भोगना एक साथ प्रारंभ करते हैं और एक साथ ही उसका विनाश करते हैं, तथा द्वितीय प्रकार के जो सलेश्य अनन्तरोपपन्न नैरयिक हैं वे पापकर्म का भोगना यद्यपि एक साथ प्रारंभ करते हैं पर उसका विनाश भिन्न भिन्न काल में करते हैं। इसीलिये हे गौतम ! मैंने पूर्वोक्त रूप से ऐसा कहा है कि कितनेक सलेश्य अनन्तरोपपन्नक नैरयिक ऐसे होते हैं कि जो पापकर्म का भोगना साथ–साथ प्रारम्भ

કહો છે. કે–જે સલેશ્ય અનંતરોપપન્નક નૈરયિકો છે, તેઓ પૈકી કેટલાક લેશ્યાવાળા અનંતરોપપન્નક નૈરયિકો પાપકર્મ ભોગવવાનો પ્રારંભ એક સાથે કરે છે, અને તેનો વિનાશ પણ એક સાથે જ કરે છે ? તથા કેટલાક અનંતરોપપન્નક નૈરયિકો પાપકર્મ ભોગવવાનો પ્રારભતો એક સાથે કરે છે, પરંતુ તેનો વિનાશ તેઓ જુદા જુદા સમયે કરે છે, આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી તેઓને કહે છે કે–હે ગૌતમ ! લેશ્યાવાળા અનતરોપપન્નક નૈરયિકો બે પ્રકારના હોય છે. કેટલાક સમાન આયુષ્યવાળા સમોપપન્નક અને કેટલાક સમાન આયુષ્યવાળા વિષમોપન્નક, આમાં જેઓ પહેલા પ્રકારના લેશ્યાવાળા અનંતરોપપન્નક નૈરયિકો હોય છે, તેઓ પાપકર્મ ભોગવવાનો પ્રારભ એક સાથે કરે છે, અને એક સાથે જ તેનો વિનાશ કરે છે. તથા બીજા પ્રકારના જેઓ લેશ્યાવાળા અનંતરોપપન્નક નૈરયિકો છે, તેઓ પાપકર્મ ભોગવવાનો પ્રારંભ જોકે એક સાથે કરે છે, પરંતુ તેનો વિનાશ જુદા જુદા કાળમાં કરે છે, તે કારણથી હે ગૌતમ ! મેં પૂર્વોક્ત પ્રકારથી એવું કહ્યુ છે કે–કેટલાક લેશ્યાવાળા

पापं कर्म प्रास्थापयन् समकं न्यस्थापयन् केचन सलेश्यानन्तरोपपन्ननारकाः पापं कर्म समकं प्रास्थापयन् विषमकमेव न्यस्थापयन्, एतदेव 'एवं चेव' इति प्रकरणेन कथितमिति। 'एवं जाव अणागारोवउत्ता' एवं लेश्यापदवदेव यावदनाकारोपयुक्ताः, अत्र यावत्पदेन कृष्णलेश्यापदत आरभ्य साकारोपयोग-पदपर्यन्तानां ग्रहणं भवति तथा च कृष्णपाक्षिकानन्तरोपपन्नकनारकादारभ्य अनाकारोपयुक्त पर्यन्तनारकविषये पापकर्मणः प्रस्थापने निष्ठापने च समानैव रीति ज्ञेयेतिभावः। 'एवं असुरकुमाराणं' एवम्-नारकवदेव असुरकुमाराणामपि सर्वपदेषु एवमेव प्रक्रिया ज्ञातव्या। 'एवं जाव वेमाणियाणं' एवम्-असुरकुमार-वदेव यावद्वैमानिकानाम्-वैमानिकपर्यन्तानाम् 'नवरं जं जस्स अत्थि तं तस्स

करते हैं और उसका विनाश भिन्न भिन्न काल में करते हैं इत्यादि, 'एवं जाव अणागारोवउत्ता' लेश्यापद के जैसे ही यावत् अनाकारोपयुक्त पद तक भी यही कथन का क्रम जानना चाहिये, यहां यावत्पद से नरक योग्य कृष्णलेश्या पद से प्रारम्भ कर साकारोपयोग पद तक के नैरयिकों का ग्रहण हुआ है-तथा च-कृष्णलेश्य अनन्तरोपपन्नक नारक से लेकर अनाकारोपयोगयुक्त तक के पद वाले नारकों के विषय में पापकर्म के भोगने में और उसके विनाश करने में समान रीति जाननी चाहिये, 'एवं असुरकुमाराणं' नारक की जैसी रीति ही असुर-कुमारों के समस्त पदों में भी समझनी चाहिये, 'एवं जाव वेमाणियाणं' और इसी प्रकार की रीति यावत् वैमानिकों के विषय में पापकर्मों के भोगने में और उसके विनाश करने में जाननी चाहिये, परन्तु इसमें इतनी विशेषताका ध्यान रखना चाहिये कि जो लेश्यादिक जिसके हो वही उसको कहना चाहिये। दण्डकों की रचना उन-उन पदों

અનંતરાપપન્નક નૈરયિકો એવા હોય છે કે જેઓ પાપકર્મ ભોગવવાનો પ્રારંભ એક સાથે કરે છે, અને તેનો વિનાશ જુદા જુદા સમયમાં કરે છે. ઈત્યાદિ

'एवं जाव अणागारोवउत्ता' લેશ્યાપદના કથન પ્રમાણે જ યાવત્ અના-કારોપયોગવાળા પદ સુધી આ પ્રમાણે જ કથનનો ક્રમ સમજવો જોઇએ. અહીંયા યાવત્પદથી કૃષ્ણલેશ્યાપદથી આરંભીને સાકારોપયોગ પદ સુધીના નૈરયિકો ગ્રહણ કરાયા છે. તથા-કૃષ્ણપાક્ષિક અનંતરોપપન્નક નારકોથી લઇને અનાકારોપયુક્ત સુધીના પદવાળા નારકોના, વિષયમાં પાપકર્મના ભોગવવામાં અને તેનો વિનાશ કરવામાં સરખી રીતે સમજવા. 'एवं असुरकुमारणं' નારકના કથન પ્રમાણે જ અસુરકુમારોના સઘળા પદોમાં પણ સમજવું. 'एवं जाव वेमाणियाणं' આજ પ્રમાણેની રીત યાવત્ વૈમાનિકો ના સંબંધમાં પાપકર્મ ભોગવવામાં અને તેનો વિનાશ કરવામાં સમજવી.

भाणियव्व' नवरं यत् लेश्यादिकं यस्यास्ति-विद्यते तदेव तस्य वक्तव्यम् तत्तत् पदमाश्रित्यैव तत्र दण्डको विधेय इति। 'एवं णाणावरणिज्जेण वि दंडओ' एवं पापकर्मप्रस्थापनवदेव ज्ञानावरणियकर्मणाऽपि दण्डको भणितव्य इति। 'एवं निरवसेसं जाव अतराइए णं' एव ज्ञानावरणीयदण्डकवदेव यावत् अन्तरायिकेनाऽपि निरवशेषो दण्डको भणितव्य इति। सेवं भंते! सेवं भंते! त्ति जाव विहरइ' तदेव भदन्त! तदेव भदन्त! इति यावद्विहरति हे भदन्त! कर्मप्रस्थापनादिविषये यद्देवानुप्रियेण कथितं तत्सर्वम् एवमेव-सर्वथा सत्यमेव इति कथयित्वा गौतमो भगवन्त वन्दते नमस्यति, वन्दित्वा नमस्यित्वा संयमेन तपसा आत्मानं भावयन् विहरति, इति ॥सू० १॥

इति एकोनत्रिंशत्तमे शतके द्वितीयोद्देशकः समाप्तः ॥२९-२॥

---

को लगाकर वहां करनी चाहिये। 'एवं णाणावरणिज्जेण वि दंडओ' पापकर्म के प्रस्थापन के जैसा ही ज्ञानावरणीय कर्म के साथ भी दण्डक कहना चाहिये, 'एवं निरवसेसं जाव अंतराइयं' और यह सब ज्ञानावरणीय के जैसा कथन यावत् अन्तराय कर्म तक करना चाहिये, 'सेवं भंते! सेवं भंते! त्ति जाव विहरइ' हे भदन्त! कर्मप्रस्थापनादि के विषय में जो आप देवानुप्रियने कहा है-वह सब कथन सर्वथा सत्य ही है इस प्रकार कहकर गौतमने प्रभु को वन्दना की और उन्हें नमस्कार किया। वन्दना नमस्कार कर फिर वे संयम और तप से आत्माको भावित करते हुए अपने स्थान पर विराजमान हो गये॥सू० १॥

द्वितीय उद्देशक समाप्त ॥२९-२॥

---

પરંતુ તેમાં એ વિશેષ પણાનું ધ્યાન રાખવું કે જે લેશ્યા વિગેરે જેને કહ્યા હોય તેજ લેશ્યા વિગેરે તેને કહેવા જોઈએ. દંડકોની રચના તે તે પદો લગાવીને કહી લેવી. 'एवं णाणावरणिज्जेण वि दंडओ' પાપકર્મના કથન પ્રમાણે જ જ્ઞાનાવરણીય કર્મની સાથે પણ દંડકો કહેવા જોઈએ. 'एवं निरवसेसं जाव अंतराइयं' અને જ્ઞાનાવરણીય કર્મ પ્રમાણેનું કથન યાવત્ અંતરાકર્મ સુધી સમજવું.

'सेवं भंते! सेवं भंते! त्ति जाव विहरइ' હે ભગવન્ કર્મના પ્રસ્થાપન વિગેરે વિષયમાં આપદેવાનુપ્રિયે જે કથન કર્યું છે. તે સઘળું કથન સર્વથા સત્ય જ છે આપ દેવાનુપ્રિયે આ વિષયના સંબંધમાં કહેલ કથન આપ્ત હોવાથી સર્વથા સત્ય જ છે. આ પ્રમાણે કહીને ગૌતમસ્વામીએ પ્રભુશ્રીને વંદના કરી તેઓને નમસ્કાર કર્યા વંદના કરીને તે પછી તેઓ સંયમ અને તપથી પોતાના આત્માને ભાવિત કરતા થકા પોતાના સ્થાન પર બિરાજમાન થયા ॥સૂ. ૧॥

બીજો ઉદ્દેશો સમાપ્ત ॥૨૯-૨॥

तृतीयोद्देशकत आरभ्यैकादशान्ता उद्देशका आरभ्यन्ते

द्वितीयोद्देशकं निरूप्य क्रमप्राप्तान् तृतीयोद्देशकादारभ्य एकादशान्तान् उद्देशकान् निरूपयन्नाह-'एवं' इत्यादि ।

**सूत्रम्-एवं एएणं गमएणं जच्चेव बंधिसए उद्देसगपरिवाडी सच्चेव इह वि भाणियव्वा जाव अचरिमो त्ति। अणंतर उद्देसगाणं चउण्हं वि एक्का वत्तव्वया, सेसाणं सत्तण्हं एक्का ॥सू० १॥**

**एगूणतीसइमे सए तइयाइ एगारस उद्देसगा समत्ता ॥२९॥३-११॥**

**एगूणतीसइमं कम्मपट्ठवणसयं समत्तं ॥२९॥**

छाया—एवमेतेन गमकेन यैव बन्धिशतके उद्देशकपरिपाटी सैवेहापि भणितव्या यावदचरम इति। अनन्तरोद्देशकानां चतुर्णामपि एका वक्तव्यता, शेषाणां सप्तानामेका ॥सू० १॥

॥ एकोनत्रिंशत्तमे शतके तृतीयत एकादशान्ता उद्देशकाः समाप्ताः ॥

॥ एकोनत्रिंशत्तमं कर्मप्रस्थापनशतकं समाप्तम् ।२९॥

टीका—'एवं' एवम्-द्वितीयोद्देशकवदेव 'एए णं गमए णं' एतेन-उपरि प्रदर्शितेन गमकेन-गमकक्रमेण 'जच्चेव बंधिसए उद्देसगपरिवाडी' यैव बन्धि

---

उद्देशक ३-११-

द्वितीय उद्देशक का निरूपण करके अब सूत्रकार क्रम प्राप्त तृतीय उद्देशक से प्रारम्भ कर ११ ग्यारहवें उद्देशक पर्यन्त के उद्देशकों का निरूपण करते हैं-'एवं एएण गमएणं जच्चेव बंधिसए'-इत्यादि

टीकार्थ- उपर्युक्त गमक क्रम से जो बन्धिशतक में-२६ वें शतक में-उद्देशकों-११ उद्देशकों की परिपाटी-प्रणाली-दिखलाई गई है

---

ત્રીજા ઉદ્દેશાનો પ્રારંભ--

બીજા ઉદ્દેશાનું નિરૂપણ કરીને હવે સૂત્રકાર ક્રમથી આવેલ આ ત્રીજા ઉદ્દેશાથી પ્રારંભ કરીને અગીયારમા ઉદ્દેશાઓ સુધીના નવ ઉદ્દેશાઓનું નિરૂપણ કરે છે-'एवं एएण गमएण जच्चेव बंधिसए' ઇત્યાદિ

ટીકાર્થ--ઉપર કહેલા ગમકના પ્રમાણે બંધી શતકમાં એટલે કે--૨૬ છવ્વીસમાં શતકમાં અગિયાર ઉદ્દેશાઓની પરિપાટી-પ્રણાલી બતાવવામાં

शतके षड्विंशतितमे शतके उद्देशकानाम् एकादशसंख्यकानां परिपाटी-प्रणालीप्रदर्शिता 'सच्चेव इह वि भाणियव्वा' सैव परिपाटी इहापि एकोनत्रिंशत्तमशतकस्य तृतीयाद्येकादशान्तोद्देशकेषु भणितव्या 'जाव अचरिमोत्ति' यावद् अचरम इति, अचरमः खलु भदन्त ! नारकाः किं समकं प्रास्थापयन् समकं व्यस्थापयन् इत्यादि सर्वमपि प्रकरणं वक्तव्यमिति, यावत्पदेन परम्परोपपन्ना-ऽनन्तरावगाढ-परम्परावगाढा-ऽनन्तराहारक-परम्पराहारका-ऽनन्तरपर्याप्त-परम्परपर्याप्त-चरमोद्देशकपर्यन्तानामष्टानामुद्देशकानां संग्रहोऽत्र करणीयः 'अणंतरउद्देसगाणं चउण्हं वि एका वत्तव्वया' अनन्तरोद्देशकानाम्-अनन्तरपदविशिष्टानां चतुर्णाम्-द्वितीय-चतुर्थ-षष्ठा-ष्टमानाम्-उपपन्ना-ऽवगाढा-ऽऽहारक-पर्याप्तोद्देशकानाम-

---

वही परिपाटी इस २९ वे शतक के तृतीय उद्देशक से लेकर ११ वें उद्देशक पर्यन्त के उद्देशकों में कहनी चाहिये, अचरम (अन्तिम) उद्देशक ग्यारहवां उद्देशक है सो यहां तक के उद्देशकों में पूर्वोक्त पद्धति के अनुसार सब कथन करना चाहिये, जैसे कि-हे भदन्त ! जो नैरयिक अचरम होते हैं वे क्या पापकर्म का भोगना साथ-साथ प्रारम्भ करते हैं और एक साथ ही क्या उसका विनाश करते हैं ? इत्यादि रूप से समस्त प्रकरण यहां कहना चाहिये, यावत्पद से यहां परम्परोपपन्न, अनन्तरावगाढ, परम्परावगाढ, अनन्तराहारक, परम्पराहारक अनन्तरपर्याप्त, परम्परपर्याप्त और चरम इन आठ उद्देशकों का संग्रह किया गया है। 'अणंतरउद्देसगाणं चउण्हं वि एक्का वत्तव्वया' अनन्तर पद विशिष्ट चारों उद्देशकों की द्वितीय उद्देशक, चतुर्थ उद्देशक, षष्ठ उद्देशक और आठवां उद्देशक-इनकी-तथा-उपपन्न, अवगाढ, आहारक एवं पर्याप्त

---

આવી છે. એજ પ્રણાલી આ ૨૯ ઓગણત્રીસમા શતકના ત્રીજા ઉદ્દેશાથી લઈને અગિયારમા ઉદ્દેશાઓ સુધીના સઘળા ઉદ્દેશાઓમાં કહેવું જોઈએ અચરમ (છેલ્લા) ઉદ્દેશો અગિયારમો ઉદ્દેશો છે તો તે અગિયારમા ઉદ્દેશા સુધીના ઉદ્દેશાઓમાં પૂર્વોક્ત પદ્ધતિ પ્રમાણે સઘળું કથન કહેવું જોઈએ જેમ કે-હે ભગવન્ જે નૈરયિકો અચરમ હોય છે, તેઓ એક સાથે પાપ કર્મ ભોગવવાનો આરંભ કરે છે? અને એક સાથે જ તેનો ક્ષય કરે છે? વિગેરે પ્રકારથી સમગ્ર પ્રકરણ અહિયાં કહેવું જોઈએ અહિયા યાવત્પદથી પરંપરોપપન્નક, અનંતરાવગાઢ, પરંપરાવગાઢ, અનંતરાહારક, પરંપરાહારક, અનંતરપર્યાય, પરંપરપર્યાય અને ચરમ આ આઠ ઉદ્દેશાઓનો સંગ્રહ થયો છે. 'अणंतरउद्देसगाण चउण्हवि एक्का वत्तव्वा' અનંતર પદથી યુક્ત ચારે ઉદ્દેશાઓનું એટલે કે બીજા, ચોથા, છઠ્ઠા અને આઠમા ઉદ્દેશાઓનું તથા ઉપપન્ન, અવ

पि एका समाना वक्तव्यता भणितव्या 'सेसाणं सत्तण्हं एक्का' शेषाणां सप्तानां समुच्चयोद्देशकपरम्परपदविशिष्टोपपन्नाद्युद्देशकचतुष्टक-चरमाचरमाख्यां प्रथम-तृतीय-पञ्चम-सप्तम-नवम-दशमैकादशानामुद्देशकानामेका वक्तव्यता भणितव्या आलापप्रकारश्च सर्वत्र बन्धिशतकीयोद्देशकवदेव स्वयमेवोहनीय इति ॥सू० १॥

इति श्री-विश्वविख्यातजगद्वल्लभादिपदभूषितबालब्रह्मचारि - 'जैनाचार्य' पूज्यश्री-घासीलालव्रतिविरचितायां "श्री भगवतीसूत्रस्य" प्रमेयचन्द्रिकाख्यायां व्याख्यायां एकोनत्रिंशत्तमे शतके तृतीयादारभ्यैकादशान्ता उद्देशकाः समाप्ताः।

एकोनत्रिंशत्तमं कर्मप्रस्थानशतकं समाप्तम् ॥२९॥

---

इन उद्देशकों की वक्तव्यता समान है, तथा-'सेसाणं सत्तण्हं एक्को' शेष सातों-प्रथम, तृतीय, पंचम, सप्तम, नवम, दशम और एकादश इन उद्देशकों की वक्तव्यता एक सी है। यहां सब जगह आलापक प्रकार बन्धि शतकीय उद्देशकों के जैसे अपने आप उत्पन्न करना चाहिये, तृतीय उद्देशक से लेकर ११ वें तक के ९ उद्देशक का कथन समाप्त ॥सू० १॥

जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलालजीमहाराजकृत "भगवतीसूत्र" की प्रमेयचन्द्रिका व्याख्याके उनतीसवें शतकका तीसराउद्देशक से ग्यारहवां पर्यन्त के नव उद्देशक समाप्त ॥२९-३-११॥

२९ वां शतक समाप्त

---

ગાઢ આહારક અને પર્યાપ્ત આ ઉદ્દેશાઓનું કથન સરખું જ છે, તથા 'सेसाण सत्तण्हं एक्का' બાકીના સાતે એટલે કે-પહેલો, ત્રીજો, પાંચમો સાતમો, નવમો, દશમો અને અગીયારમો આ સાતે ઉદ્દેશાઓનું કથન એક સરખું છે. અહિયાં બધા જ ઉદ્દેશાઓમાં આલાપકનો પ્રકાર બંધી શતકમાં કહેલા ઉદ્દેશાઓ પ્રમાણે સ્વયં સમજી લેવો આ પ્રમાણે આ ત્રીજા ઉદ્દેશાથી લઈને અગીયારમાં ઉદ્દેશા સુધીનું કથન કહેલ છે ॥સૂ૦ ૩-૧૧॥

જૈનાચાર્ય જૈનધર્મદિવાકર પૂજ્યશ્રી ઘાસીલાલજી મહારાજકૃત "ભગવતીસૂત્ર"ની પ્રમેયચન્દ્રિકા વ્યાખ્યાના ઓગણત્રીસમા શતકના ત્રીજા ઉદ્દેશા સુધીના અગીયાર ઉદ્દેશા સુધીના નવ ઉદ્દેશા સમાપ્ત ॥૨૯-૩-૧૧॥

॥ઓગણત્રીસમું શતક સમાપ્ત॥

---

१ समुच्चय उद्देशक परम्परपदयुक्त उपपन्न आदि ४ उद्देशक, चरम और अचरम उद्देशक इस प्रकार ये ७ सात उद्देशक हैं।

अथ त्रिंशत्तमं शतकमारभते

व्याख्यातमेकोनत्रिंशत्तमं शतकम् क्रमप्राप्तं त्रिंशत्तमं शतकमारभते, अस्य च पूर्वशतकेनायमभिसम्बन्धः–पूर्वशतके कर्मप्रस्थापनाद्याश्रित्य जीवा विचारिताः अत्र तु त्रिंशत्तमे शतके कर्मबन्धादिकारणस्वरूपवस्तुवादमाश्रित्य जीवा एव विचार्यन्ते, तदनेन सम्बन्धेन आयातस्यास्य त्रिंशत्तमशतकस्य द्वादशोद्देशकात्मकस्येदं प्रथमोद्देशकादिसूत्रम्–'कइ णं भंते' इत्यादि।

**मूलम्–कइ णं भंते! समोसरणा पन्नत्ता? गोयमा! चत्तारि समोसरणा पन्नत्ता, तं जहा किरियावाई१, अकिरियावाई२, अन्नाणिय वाई३, वेणइयवाई४। जीवा णं भंते! किं किरियावाई अकिरियावाई अन्नाणियवाई वेणइयवाई? गोयमा! जीवा वि रेयावाई वि, अकिरियावाई वि, अन्नाणियवाई वि, वेणइयवाइ वि सलेस्सा णं भंते! जीवा किं किरियावाई पुच्छा, गोयमा! किरियावाई वि, अकिरियावाई वि, अन्नाणियवाई वि, वेणइयवाई वि४। एवं जाव सुक्कलेस्सा। अलेस्साणं भंते! जीवा पुच्छा, गोयमा! किरियावाई, नो अकिरियावाई नो अन्नाणियवाई नो वेणइयवाई। कण्हपक्खियाणं भंते! जीवा किं किरियावाई पुच्छा, गोयमा! नो किरियावाई अकिरियावाई अन्नाणियवाई वि वेणइयवाई वि। सुक्खपक्खिया जहा सलेस्सा। सम्मादिट्ठी जहा अलेस्सा। मिच्छा-[illegible] कण्हपक्खिया। सम्मामिच्छादिट्ठी णं पुच्छा, [illegible] नो किरियावाई नो अकिरियावाई अन्नाणियवाई वि [illegible]वाई वि। नाणी जाव केवलनाणी जहा अलेस्सा। अन्ना-[illegible]ाव विभंगनाणी जहा कण्हपक्खिया। आहारसन्नोवउत्ता [illegible] परिग्गहसन्नोवउत्ता जहा सलेस्सा। नो सन्नोवउत्ता जहा**

अलेस्सा। सवेदगा जाव नपुंसगवेदगा जहा सलेस्सा। अवेदगा जहा अलेस्सा। सकसाई जाव लोभकसाई जहा सलेस्सा। अकसाई जहा अलेस्सा। सजोगी जाव कायजोगी जहा सलेस्सा। अजोगी जहा अलेस्सा। सागारोवउत्ता अणागारोवउत्ता जहा सलेस्सा। नेरइयाणं भंते! किं किरियावाई पुच्छा, गोयमा! किरियावाई वि जाव वेणइयवाई वि। सलेस्सा णं भंते! नेरइया किं किरियावाई पुच्छा, एवं चेव। एवं जाव काउलेस्सा, कण्हपक्खिया, किरिया विवज्जिया। एवं एएणं कमेणं जच्चेव जीवाणं वत्तव्वया सच्चेव नेरइयाणं वत्तव्वया वि जाव अणागारोवउत्ता नवरं जं अत्थि तं भाणियव्वं, सेसं न भण्णइ। जहा नेरइया, एवं जाव थणियकुमारा। पुढवीकाइयाणं भंते! किं किरियावाई पुच्छा, गोयमा! नो किरियावाई अकिरियावाई वि, अन्नाणियवाई वि, नो वेणइयवाई। एवं पुढविकाइयाणं जं अत्थि तत्थ सव्वत्थ वि एयाइं दो मज्झिल्लाइं समोसरणाइं जाव अणागारोवउत्ता वि। एवं जाव चउरिंदियाणं सव्वट्ठाणेसु एयाइं चेव मज्झिल्लगाइं दो समोसरणाइं। सम्मत्तनाणे हि वि एयाणि चेव मज्झिल्लगाइं दो समोसरणाइं। पंचिंदियतिरिक्खजोणिया जहा जीवा नवरं जं अत्थि तं भाणियव्वं। मणुस्सा जहा जीवा तहेव निरवसेसं। वाणमंतरजोइसिय वेमाणिया जहा असुरकुमारा ॥सू० १॥

छाया—कति खलु भदन्त! समवसरणानि प्रज्ञप्तानि? गौतम! चत्वारि समवसरणानि प्रज्ञप्तानि, तद्यथा—क्रियावादी अक्रियावादी अज्ञानवादी विनयवादी च। जीवाः खलु भदन्त! किं क्रियावादिनोऽक्रियावादिनः अज्ञानवादिनः वैनयिकवादिनः? गौतम! जीवाः क्रियावादिनोऽपि अक्रियावादिनोऽपि आज्ञानिक-

वादिनोऽपि वैनयिकवादिनोऽपि । सलेश्याः खलु भदन्त ! जीवाः किं क्रियावादिनः पृच्छा, गौतम ! क्रियावादिनोऽपि अक्रियावादिनोऽपि अज्ञानिकवादिनोऽपि वैनयिकवादिनोऽपि । एवं यावत् शुक्ललेश्याः । अलेश्याः खलु भदन्त ! जीवाः पृच्छा, गौतम ! क्रियावादिनः, नो अक्रियावादिनः, नो वैनयिकवादिनः । कृष्णपाक्षिकाः खलु भदन्त ! जीवाः किं क्रियावादिनः, पृच्छा, गौतम ! नो क्रियावादिनः, अक्रियावादिनः, अज्ञानिकवादिनोऽपि वैनयिकवादिनोऽपि । शुक्लपाक्षिकाः यथा सलेश्याः, सम्यग्दृष्टयो यथा अलेश्याः मिथ्यादृष्टयो यथा कृष्णपाक्षिकाः । सम्यग्मिथ्यादृष्टयः खलु पृच्छा, गौतम ! नो क्रियावादिनः नो अक्रियावादिनः, अज्ञानिकवादिनोऽपि वैनयिकवादिनोऽपि । ज्ञानिनो यावत् केवलज्ञानिनः, यथा अलेश्याः । अज्ञानिनो यावद् विभङ्गज्ञानिनो यथा कृष्णपाक्षिकाः । आहारसंज्ञोपयुक्ता यावत्परिग्रहसंज्ञोपयुक्ता यथा सलेश्याः । नो संज्ञोपयुक्ता यथा अलेश्याः । सवेदका यावत् नपुंसकवेदकाः यथा सलेश्याः । अवेदका यथा अलेश्याः । सकषायिनो यावत् लोभकषायिनो यथा सलेश्याः । अकषायिनो यथा अलेश्याः सयोगिनो यावत् काययोगिनो यथा सलेश्याः । अयोगिनो यथा अलेश्याः, साकारोपयुक्ता अनाकारोपयुक्ता यथा सलेश्याः । नैरयिकाः खलु भदन्त ! किं क्रियावादिनः ? पृच्छा, गौतम ! क्रियावादिनो यावत् वैनयिकवादिनोऽपि । सलेश्याः खलु भदन्त ! नैरयिकाः किं क्रियावादिन एवमेव । एवं यावत् कापोतलेश्याः । कृष्णपाक्षिकाः क्रिया विवर्जिताः । एवमेतेन क्रमेण यैव जीवानां वक्तव्यता सैव नैरयिकाणां वक्तव्यताऽपि यावदनाकारोपयुक्ताः । नवरं यदस्ति तद्भणितव्यम्, शेषं न भण्यते । यथा नैरयिकाः, एवं यावत् स्तनितकुमाराः । पृथिवीकायिकाः खलु भदन्त ! कि क्रियावादिनः पृच्छा, गौतम ! नो क्रियावादिनः, अक्रियावादिनोऽपि, अज्ञानिकवादिनोऽपि, नो वैनयिकवादिनः । एवं पृथिवीकायिकानां यदस्ति तत्र सर्वत्रापि एते द्वे मध्यमे समवसरणे यावत् अनाकारोपयुक्ता अपि । एवं यावत् चतुरिन्द्रियाणाम्, सर्वस्थानेषु एते एव मध्यमे द्वे समवसरणे । सम्यग्ज्ञानिभिरपि एते एव मध्यमे द्वे समवसरणे । पञ्चेन्द्रियतिर्यग्योनिका यथा जीवाः । नवरं यदस्ति तद् भणितव्यम् । मनुष्या यथा जीवा तथैव निरवशेषम् । वानव्यन्तरज्योतिष्कवैमानिका यथा असुरकुमाराः ॥सू० १॥

टीका--'कइ णं भंते ! समोसरणा पन्नत्ता' कति खलु भदन्त ! समवसरणानि प्रज्ञप्तानि अनेकप्रकारकपरिणामवन्तो जीवाः समवसरन्ति कथंचित्

तुल्यतया तिष्ठन्ति येषु मतेषु दर्शनेषु वा तानि समवसरणानि मतानि दर्शनानि वा, तानि कति प्रकारकाणि भवन्तीति समवसरणविषयकः प्रश्नः, भगवानाह-

---

## तीसवें शतक का प्रथम उद्देशक का प्रारंभ

२९ वां शतक व्याख्यात हो चुका, अब क्रमप्राप्त ३० वां शतक प्रारम्भ होता है, इस शतक का पूर्व शतक के साथ ऐसा सम्बन्ध है कि उस पूर्व शतक में कर्मप्रस्थापनादि को लेकर जीवों का विचार किया है, परन्तु अब इस शतक में कर्मबन्ध आदि के कारणभूत वस्तुवाद को आश्रित करके उन जीवो का विचार होता है। इस सम्बन्ध को लेकर यह ३० तीसवां शतक कहा जा रहा है। इसमें १२ बारह उद्देशक हैं। 'कइ णं भंते ! समोसरणा पण्णत्ता-इत्यादि

टीकार्थ-हे भदन्त ! समवसरण-कितने प्रकार के कहे गये हैं। 'अनेक प्रकारकपरिणामवन्तो जीवा, समवसरन्ति कथंचित् तुल्यतया तिष्ठन्ति येषु मतेषु दर्शनेषु वा तानि समवसरणानि' इस व्युत्पत्ति के अनुसार समवसरण शब्द से यहां मत या दर्शन गृहीत हुए है। क्योंकी इन मतादिकों में अनेक प्रकार के परिणामोवाले मनुष्य प्राणी रहा करते

---

## ત્રીસમા શતકનો પ્રારંભ--

### "ઉદ્દેશો પહેલો"

ઓગણત્રીસમું શતક કહેવાઈ ગયું. હવે ક્રમ પ્રાપ્ત આ ત્રીસમાશતકનો આરંભ થાય છે. પૂર્વ શતકની સાથે આ શતકનો એ પ્રમાણે સંબંધ છે કે--પૂર્વ શતકમાં કર્મપ્રસ્થાપના વિગેરેને લઈને જીવોનો વિચાર કરવામાં આવ્યો છે-પરંતુ હવે આ શતકમાં કર્મ બંધના કારણભૂત વસ્તુવાદનો આશ્રય કરીને તે જીવોનો વિચાર કરવામાં આવશે, આ સંબંધથી આ ૩૦ ત્રીસમું શતક કહેવાઈ રહ્યું છે. આ શતકમાં બાર ઉદ્દેશાઓ છે.

'कइ णं भंते ! समोसरणा पन्नत्ता' ઈત્યાદિ

ટીકાર્થ--હે ભગવન્ સમવસરણ-મત કેટલા પ્રકારના કહ્યા છે? 'अनेक प्रकारकपरिणामवन्तो जीवाः समवसरन्ति कथंचित् तुल्यतया तिष्ठति येषु मतेषु दर्शनेषु वा तानि समवसणानि' આ વ્યુત્પત્તિ અનુસાર સમવસણ શબ્દથી અહિયાં મત-અથવા દર્શન ગ્રહણ કરાયેલ છે. કેમ કે આ મત વિગેરેમાં અનેક પ્રકારના પરિણામવાળા મનુષ્ય પ્રાણી રહ્યા છે. આ રીતે ગૌતમસ્વામીએ

'गोयमा' इत्यादि, 'गोयमा' हे गौतम ! 'चत्तारि समोसरणा पन्नत्ता' चत्वारि-चतुष्प्रकारकाणि समवसरणानि प्रज्ञप्तानि-कथितानि-इति । 'तं जहा' तद्यथा- 'किरियावाई' क्रियावादिनः-क्रियाचारित्रपरिपालनात्मककार्यरूपा, सा च कर्त्तार-मन्तरेण अनुपपद्यमाना कर्त्तारमाक्षिपन्ती आत्मसमवायिनीति वदन्ति एवं शीला वा ये ते क्रियावादिनः । अथवा क्रियैव प्रधानं न ज्ञानम्, नहि गुडमाधुर्यज्ञान-वान् अनुभवति रसनया गुडास्वादम् अतो न ज्ञानं प्रधानम् अपि तु क्रियैव सर्वत्र प्रधाना एतादृश क्रियावादनशीलाः क्रियावादिनः । अथवा क्रियां-जीवादिपदा-र्थोऽस्तीत्यादिकां वदितुं शीलं येषां ते क्रियावादिनः, ते चात्मास्तित्व प्रतिपत्ति-

है। इस प्रकार से गौतमने यह प्रश्न समवरण के सम्बन्ध में किया है। इसके उत्तर में प्रभुश्री उनसे कहते हैं-'गोयमा ! चत्तारि समोसरणा पण्णत्ता' हे गौतम ! समवसरण चार प्रकार के कहे गये हैं। 'तं जहा'-जैसे कि-'किरियावाई' क्रियावादि चरित्रको पालन करने रूप जो प्रकृति है उसका नाम क्रिया है। यह क्रिया कर्ता के बिना होती नहीं है। इस-लिये कर्ता रूप आत्माकी सिद्धि इससे होती है। इस प्रकार आत्मा के अस्तित्व को माननेवाले जो हैं वे सब क्रियावादी हैं। अथवा-क्रिया ही प्रधान है, ज्ञान नहीं। कहीं गुड की केवल मधुरता का ज्ञानवाला व्यक्ति मात्र जिह्वा से गुडके आस्वाद को थोड़े ही जानता है, गुड के आस्वाद को जानने के लिये उसके खाने रूप क्रिया की आवश्यकता होती है। अतः क्रिया ही सर्वत्र प्रधान है ज्ञान नहीं। इस प्रकार से जो क्रिया की प्रधानता माननेवाले हैं वे क्रियावादी हैं। अथवा-जीवादि पदार्थों की अस्तित्व रूप क्रिया को माननेवाले जो हैं वे क्रियावादी हैं।

સમવસરણના સંબંધમાં પ્રશ્ન કરેલ છે. આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી ગૌતમ સ્વામીને કહે છે કે-'गोयमा ! चत्तारि समोसरणा पण्णत्ता' હે ગૌતમ! સમવસરણ ચાર પ્રકારના કહેલ છે. 'त जहा' તે આ પ્રમાણે છે,--'किरिया वाई' ક્રિયાવાદી, ચારિત્રને પાલન કરવા રૂપ જે પ્રકૃતિ છે, તેનું નામ ક્રિયા છે. આ ક્રિયા કર્તા શિવાય થતી નથી, કોઈ ગોળના કેવળ મધુરપણાના જ્ઞાન વાળો પુરૂષ જીભથી ગોળની મીઠાશનો સ્વાદ થોડો જ જાણે છે? ગોળના સ્વાદો જાણવા માટે તેને ખાવારૂપ ક્રિયાની જરૂરત હોય છે જ તેથી ક્રિયા જ સર્વત્ર મુખ્ય છે, જ્ઞાન નહીં. આ રીતે જેઓ ક્રિયાને જ મુખ્ય માન-નારા છે. તેઓ ક્રિયાવાદી કહેવાય છે. અથવા-જીવ વિગેરેના અસ્તિત્વ-વિદ્યમાનપણાની ક્રિયાને જેઓ માનનારા છે, તેઓ ક્રિયાવાદી કહેવાય છે.

लक्षणा अशीत्यधिकशतसंख्यकाः सूत्रकृताङ्गादितो ज्ञातव्याः ततश्च क्रियावादि- सम्बन्धात् समवसरणमपि क्रियावादि, समवसरण समवसरणवतामभेदोपचारात् क्रियावादिन एव समवसरणमिति, 'अकिरियावादी' अक्रियावादिनः न क्रिया अक्रिया, तां क्रियाया अभावं, न हि अनवस्थितस्य कस्यचिदपि पदार्थस्य क्रिया भवति, क्रिया सत्वे चानवस्थितेरेव अभावादित्येवं वदन्ति ये ते अक्रियावादिनः, तथा चोक्तम्- 'क्षणिकाः सर्वसंस्काराः, अस्थितानां कुतः क्रिया।
भूति र्येषां क्रिया सैव, कारकं सैव चोच्यते ॥१॥ इति।
अन्ये तु अक्रियां 'जीवादिपदार्थः नास्ति नास्ती' त्यादिकां वदितुं शीलं विद्यते येषां तेऽक्रियावादिनः, ते चात्मादिपदार्थनास्तित्व प्रतिपत्तिलक्षणा चतुरशीति विकल्पाः

ये सब क्रियावादी आत्मा के अस्तित्व को माननेवाले हैं। इनकी संख्या १८० है। इनका स्वरूप सूत्रकृताङ्ग आदि से जाना जा सकता है। क्रियावादी के सम्बन्ध से समवसरण भी क्रियावादी कहा गया है। क्यों की समवसरण और समवसरणवालों में अभेद का यहां उपचार किया गया है। अक्रियावादी अनवस्थित किसी भी पदार्थ में क्रिया नहीं होती है। यदि वहां क्रिया का सत्व माना जाय तो पदार्थ में अवस्थिति नहीं मानी जा सकती है क्यों कि इस स्थिति में वहां अनवस्थिति का अभाव हो जाता है। इस प्रकार से जो कहते हैं वे अक्रियावादी हैं-तथा कहा भी है-'क्षणिकाः सर्वसंस्कारा' इत्यादि।

दूसरे ऐसा कहते हैं-'जीवादिक पदार्थ नहीं हैं' इत्यादि रूप क्रिया को जो मानते है वे अक्रियावादी हैं। ये अक्रियावादी आत्मादि पदार्थ

આ સઘળા ક્રિયાવાદીઓ આત્માના અસ્તિત્વને માનનારા છે આ ક્રિયાવાદીઓની સંખ્યા ૧૮૦ એકસોએંસીની છે આ ક્રિયાવાદિઓનું લક્ષણ સુત્રકૃતાગ વિગરે શાસ્ત્રોમાંથી સમજી લેવું. ક્રિયાવાદીના સબંધથી સમવસરણ પણ ક્રિયાવાદી કહેવામાં આવેલ છે. કેમ કે-સમવસરણ અને સમવસરણવાળાઓમાં અહિયાં અભેદપણાનો ઉપચાર કરવામાં આવેલ છે. આ ક્રિયાવાદી-અનવસ્થિત કોઇ-પણ પદાર્થમાં ક્રિયા થતી નથી જો તેમાં ક્રિયાનુ અસ્તિત્વપણું માનવામાં આવે તો પદાર્થમાં અવસ્થિતિ માની શકાય નહી કેમ કે-એ સ્થિતિમાં ત્યાં અનવસ્થિતિનો અભાવ થઈ જાય છે. આ રીતે જેઓ કહે છે, તેઓ આ ક્રિયાવાદી છે તથા કહ્યું પણ છે-'ક્ષણિકા સર્વસસ્કારા' ઈત્યાદિ

બીજાએ એવું કહ્યું છે કે-"જીવ વિગેરે કોઈ પદાર્થ નથી" ઈત્યાદિ પ્રકારથી જેઓ ક્રિયાને માને છે. તેઓ અક્રિયાવાદી છે. આ અક્રિયાવાદિયો

स्थानान्तराद् ज्ञातव्या इति। अथवा अक्रियावादि बौद्धा ये इत्थं कथयन्ति क्रियाया नान्यत्फलं केवलं चित्तशुद्धिरेव फलमिति ते बौद्धा अक्रियावादिन इति। 'अन्नाणियवाई' अज्ञानिकवादिनः कुत्सितं ज्ञानमज्ञानम्, तद् विद्यते येषां ते अज्ञानिका इत्थंभूतश्च ते वादिन इति अज्ञानिकवादिनः, ते इत्थं प्रतिपादयन्ति- अज्ञानमेव श्रेयस्करम्, ज्ञानाद्धि तीव्रं कर्म बध्यते तथा अज्ञानपूर्वकं कृतं कर्म न बन्धाय भवति, तथा कस्यापि पुरुषस्य कत्रचिदपि वस्तुनि सम्पूर्णरूपेण ज्ञानं न भवति प्रमाणानां सम्पूर्णवस्तु विषयत्वात्, इत्येवमभ्युपगमवन्तोऽज्ञानिकवादिनः सप्तषष्ठिसंख्यकाः स्थानान्तरादवसेया इति। 'वेणइयवाई' वैनयिकवादिनः विनयेन

---

के नास्तित्व को मानते हैं। इनके चोरासी भेद हैं। ये भेद ग्रन्थान्तर से जाने जा सकते हैं। अथवा-अक्रियावादी बौद्ध हैं-इनका ऐसा कहना है कि क्रिया का और कोई फल नहीं है केवल चित्त की शुद्धि ही क्रिया का फल है। 'अन्नाणिगवाई' अज्ञानिकवादी-कुत्सित ज्ञान का नाम अज्ञान है, इस अज्ञानवाले जो है वे अज्ञानवादी हैं-इनका ऐसा कहना है कि अज्ञान ही श्रेयस्कर है क्यों कि ज्ञान से तीव्र कर्म का बन्ध होता है। तथा-अज्ञानपूर्वक किया गया कर्म बन्ध के लिये नहीं होता है। तथा -किसी भी पुरुष को किसी भी वस्तु का सम्पूर्ण रूप से ज्ञाननहीं होता है। प्रमाण ही सम्पूर्ण वस्तु को विषय करनेवाला होता है। इस प्रकार की मान्यतावाले जन अज्ञानवादी है। इनकी संख्या ६७ सडसठ की है। इनका स्वरूप नन्दीसूत्र की ज्ञानचन्द्रिका टीका से समझना चाहिये।

---

આત્મા વિગેરે પદાર્થના અવિદ્યમાનપણાને માને છે. તેઓના ૮૪ ચોર્યાશી ભેદો છે આ ભેદો અન્ય શાસ્ત્રોમાંથી સમજી લેવા

અથવા--અક્રિયાવાદી બૌદ્ધો છે-તેઓનુ કહેવુ એવું છે કે-ક્રિયાનું બીજું કાંઈ જ ફળ નથી કેવળ ચિત્તની શુધ્ધી જ ક્રિયાનું ફળ છે 'अन्नाणियवाई' અજ્ઞાનિકવાદી. કુત્સિત જ્ઞાનનું નામ અજ્ઞાન છે, આ અજ્ઞાન વાળા જેઓ હોય છે તેઓ અજ્ઞાનવાદી કહેવાય છે, તેઓનું કહેવું એવું છે છે કે-અજ્ઞાન જ કલ્યાણકારી છે. કેમકે જ્ઞાનથી તીવ્ર કર્મનો બધ થાય છે. તથા અજ્ઞાન પૂર્વક કરવામાં આવેલ કર્મ બંધન કરનાર હોતુ નથી તથા કોઈપણ પુરૂષને કોઇપણ વસ્તુનુ સંપૂર્ણ જ્ઞાન હોતું નથી. પ્રમાણ જ સમગ્ર વસ્તુનો વિષય કરવાનું હોય છે, આ પ્રમાણેની માન્યતાવાળા મનુષ્યો અજ્ઞાન વાદી કહેવાય છે. તેઓની સંખ્યા ૬૭ સડસઠની છે, તેઓનુ સ્વરૂપ નંદી- સૂત્રની જ્ઞાનચંદ્રિકા ટીકામાથી સમજી લેવું.

चरन्ति, अथवा विनय एव प्रयोजनं येषां ते वैनयिकाः वैनयिकाश्च ते वादिन इति वैनयिकवादिनः, विनयएव वा वैनयिकं, तदेव ये स्वर्गादि हेतुतया वदन्ति इत्येवं शीलाश्च ते वैनयिकवादिनः, ते च स्वर्गादिसाधनं विनयमेव वदन्ति विनयस्यैव प्राधान्येन स्वीकुर्वाणाः अनवधृतलिङ्गाचारशास्त्रः, विनयप्रतिपत्तिलक्षणाः द्वात्रिंशत्प्रकारकाः स्थानान्तरात् सूत्रकृताङ्गादिसूत्रात् अवगन्तव्या इति ।
अत्रार्थे भवति गाथा—'अत्थि त्ति किरियवाई, वयंति नत्थि त्तिऽकिरियवाइओ ।
अन्नाणि य अन्नाणं, वेणइया विणयं वायंति' ॥१॥

छाया—अस्तीति क्रियावादिनो वदन्ति, नास्तीत्य क्रियावादिनः ।
अज्ञानिका अज्ञानं, वैनयिका विनयवादमिति ॥१॥

एते सर्वेऽपि यद्यप्यन्यत्र मिथ्यादृष्टयः कथिताः तथाप्यत्र क्रियावादिनः सम्यग्दृष्टयो ग्राह्याः, क्रियावादिनो हि जीवादीनामस्तित्व स्वीकारेण सम्यग्दृष्टय एव स्वीकर्त्तव्या इति । 'जीवा णं भंते ! किं किरियावाई, अकिरियावाई, अन्नाणियवाई, वेणइयवाई' जीवाः खलु भदन्त ! किं क्रियावादिनोऽक्रियावादिनोऽज्ञानि-

'वेणईयवाई' वैनयिकवादी—इनका मन्तव्य ऐसा है कि विनय ही स्वर्ग मोक्ष आदिका हेतु है। ये विनय को ही प्रधान रूप से मानते हैं। इनका कोई निश्चित आचार, लिङ्ग या शास्त्र नहीं होता है। सिर्फ ये तो विनय को ही श्रेयस्कर मानते हैं। ये ३२ बत्तीस प्रकार के होते हैं। इनका स्वरूप नन्दीसूत्रकी ज्ञानचन्द्रिका टीका से जाना जा सकता है। इस विषय की गाथा ऐसी है—'अत्थि त्ति किरियवाई' इत्यादि ये सब क्रियावादी अक्रियावादी आदि जन यद्यपि अन्यत्र मिथ्यादृष्टि कहे गये हैं परन्तु फिर भी यहां पर क्रियावादी जीवादि के अस्तित्व को सम्यक् प्रकार से माननेवाला होने के कारण सम्यग्दृष्टि रूप से गृहीत किया गया है। 'जीवा णं भंते! किं किरियावादी अकिरियावादी अन्नाणियवादी

'वेणइयवाई' वैनयिकवादी—तेओनी मान्यता ओवी छे के—विनय ज स्वर्ग मोक्ष विगेरेनुं कारण छे. तेओ विनयने ज प्रधान माने छे. तेओनो कोई निश्चित आचारलिंग अथवा शास्त्र होतुं नथी केवळ तेओ विनयने ज श्रेयस्कर-कल्याणकारक माने छे, तेओ ३२ बत्रीस प्रकारना होय छे. तेओनुं स्वरूप-प्रकार नन्दीसूत्रनी ज्ञानचंद्रिका टीकामां आपवामां आवेल छे. त्यांथी समजी लेवुं

'अत्थित्ति किरियावाई' ईत्यादि आ सघळा क्रियावादीयो. अक्रियावादीयो विगेरेने जो के अन्य स्थळे मिथ्यादृष्टि कहेवामां आव्या छे, परंतु अहियां क्रियावादी जीव विगेरेना अस्तित्वने मानवावाळा होवाथी सम्यग्दृष्टि पणाथी वर्णवेल छे.
'जीवा णं भंते ! किरियावादी अकिरियावाई अन्नाणियवादी, वेणइयवादी

कवादिनो वैनयिकवादिनो वेति समुच्चयतो जीवमधिकृत्य प्रश्नः, भगवानाह- 'गोयमा' इत्यादि । 'गोयमा' हे गौतम ! 'जीवा किरियावाई वि' जीवाः सामान्यतः क्रियावादिनोऽपि भवन्ति तथा-'अकिरियावाई वि' अक्रियावादिनोऽपि भवन्ति तथा-'अन्नाणियवाई वि' अज्ञानिकवादिनोऽपि भवन्ति तथा-'वेणइयवाई वि' वैनयिकवादिनोऽपि भवन्तीत्युत्तरम् । सामान्यतो जीवाश्चतुर्विधा अपि भवन्ति तादृश स्वभावत्वादिति । जीवविशेषमधिकृत्य प्रश्नयन्नाह-'सलेस्सा णं' इत्यादि । 'सलेस्सा णं भंते ! जीवा किं किरियावाई पुच्छा' सलेश्याः-कृष्णनीलाद्यन्यतमलेश्यावन्तो जीवा किं क्रियावादिनो भवन्ति अथवा अक्रियावादिनो भवन्ति अथवा अज्ञानिकवादिनो भवन्ति, अथवा वैनयिकवादिनो भवन्तीति प्रश्नः पृच्छया

---

वेणइयवादी' हे भदन्त ! जीव क्या क्रियावादी हैं ? या अक्रियावादी है ? या अज्ञानवादी है ? या विनयवादी है ? ऐसा यह प्रश्न सामान्य जीव को लेकर किया गया है, इसके उत्तर में प्रभुश्री कहते हैं-'गोयमा ! जीवा किरियावाई वि' हे गौतम ! जीव सामान्यतः क्रियावादी भी होते हैं । तथा 'अकिरियावाई वि' अक्रियावादी भी होते हैं 'अन्नाणियवाई वि' अज्ञानवादी भी होते हैं । 'वेणइयवाई वि' और वैनयिकवादी भी होते हैं । तात्पर्य कहने का यही है कि सामान्य से जीव चारों प्रकार के भी होते हैं। क्योंकि जीव का स्वभाव ही कुछ ऐसा होता है। जीव विशेष को लेकर प्रश्न-'सलेस्साणं भंते ! जीवा किं किरियावाई पुच्छा' हे भदन्त ! कृष्ण, नील आदि लेश्याओं में से कोई एक लेश्या वाले जीव क्या क्रियावादी होते हैं? या अक्रियावादी होते हैं ? या अज्ञानवादी होते हैं ? या वैनयिकवादी होते हैं ? उत्तर

---

હે ભગવન્ જીવ શું ક્રિયાવાદી છે ? અથવા અક્રિયાવાદી છે ? અથવા અજ્ઞાનવાદી છે ? અથવા વિનયવાદી છે ? આ પ્રમાણેનો પ્રશ્ન સામાન્ય જીવનો આશ્રય કરીને પૂછવામાં આવેલ છે. આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી ગૌતમસ્વામીને કહે છે કે-'गोयमा ! जीवा किरियावाइत्ति' હે ગૌતમ ! જીવો સામાન્યતઃ ક્રિયાવાદી પણ હોય છે. 'अकिरियावाई वि' અક્રિયાવાદી પણ હોય છે. તથા-'अन्नाणियवाइ वि' અજ્ઞાન વાદી પણ હોય છે. 'वेणइयवाईवि' અને વૈનયિકવાદી પણ હોય છે. કહેવાનું તાત્પર્ય એ છે કે-સામાન્યથી જીવો ચારે પ્રકારના પણ હોય છે. કેમ કે જીવનો સ્વભાવ જ કંઇક એવો હોય છે. હવે જીવ વિશેષના સંબંધમાં ગૌતમસ્વામી પ્રભુશ્રીને પૂછે છે-'सलेस्साणं भंते ! जीवा किं किरियावाई पुच्छा' હે ભગવન્ કૃષ્ણનીલ વિગેરે લેશ્યાઓ પૈકી કોઈ એક લેશ્યાવાળો જીવ શું ક્રિયાવાદી હોય છે ? અથવા અક્રિયાવાદી હોય છે ? અથવા અજ્ઞાન

संगृह्यते, भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम! 'किरियावाई वि' क्रियावादिनोऽपि भवन्ति सलेश्या जीवाः, तथा 'अकिरियावाई वि' अक्रियावादिनोऽपि भवन्ति, तथा-'अन्नाणियवाई वि' अज्ञानिकवादिनोऽपि भवन्ति तथा 'वेणइयवाई वि' वैनयिकवादिनोऽपि भवन्ति सलेश्यजीवानां तथा तथा स्वभावत्वादिति। 'एवं जाव सुक्कलेस्सा' एवम्-सलेश्यजीववदेव यावत् कृष्णलेश्यजीवादारभ्य पद्मलेश्यजीवपर्यन्ताः सर्वेऽपि जीवाः चतुर्विधा अपि भवन्ति तथास्वभावत्वादिति भावः। 'अलेस्सा णं भंते! जीवा पुच्छा' अलेश्याः-लेश्यारहिता जीवाः खलु भदन्त! क्रियावादिनोऽक्रियावादिनोऽज्ञानिकवादिनो वैनयिकवादिनो भवन्तीति प्रश्नः पृच्छया संगृह्यते भगवानाह-'गोयमा' इत्यादि, 'गोयमा' हे गौतम! 'किरियावाई' क्रियावादिनोऽलेश्या जीवा भवन्ति अलेश्याः अयोगिनः सिद्धाश्च भवन्ति तेचायोगिनः सिद्धाश्च क्रियावादिन एव

में प्रभुश्री कहते हैं-'गोयमा! किरियावाई वि, अकिरियावाई वि अन्नाणियवाई वि, वेणइयवाई वि' हे गौतम सलेश्य जीव क्रियावादी भी होते हैं, अक्रियावादी भी होते हैं, अज्ञानवादी भी होते हैं और वैनयिकवादी भी होते हैं। 'एवं जाव सुक्कलेस्सा' सलेश्य जीव के जैसे ही यावत् कृष्णलेश्य जीव से लेकर शुक्ललेश्य जीव तक समस्त जीव चारों प्रकार के भी होते हैं। क्योंकि इन जीवों का स्वभाव ही ऐसा होता है। 'अलेस्सा णं भंते! जीवा पुच्छा' हे भदन्त! जो जीव लेश्यारहित है वे क्या क्रियावादी होते हैं? या अक्रियावादी होते हैं? या अज्ञानवादी होते हैं? या वैनयिकवादी होते हैं? उत्तर में प्रभुश्री कहते हैं-'गोयमा! किरियावाई' हे गौतम! अलेश्य जीव क्रियावादी

વાદી હોય છે? અથવા વૈનયિકવાદી હોય છે? આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રી ગૌતમસ્વામીને કહે છે કે-'गोयमा! किरियावाई वि अकिरिया वाईवि अन्नाणियवाई वि. वेणइयवाई वि' હે ગૌતમ! લેશ્યાવાળા જીવો ક્રિયાવાદી પણ હોય છે, અક્રિયાવાદી પણ હોય છે, અજ્ઞાનવાદી પણ હોય છે, અને વૈનયિકવાદી પણ હોય છે. 'एवं जाव सुक्कलेस्सा' લેશ્યવાળા જીવના કથન પ્રમાણે જ યાવત્ કૃષ્ણલેશ્યાવાળા જીવથી લઈને શુકલ લેશ્યાવાળા જીવ સુધીના સઘળા જીવો ચારે પ્રકારના પણ હોય છે કેમ કે આ જીવોનો સ્વભાવ જ એવો હોય છે 'अलेस्सा णं भंते! जीवा पुच्छा' હે ભગવન્ જે જીવો લેશ્યા વિનાના હોય છે, તેઓ શું ક્રિયાવાદી હોય છે? અથવા અક્રિયાવાદી હોય છે? અથવા અજ્ઞાનવાદી હોય છે? અથવા વૈનયિકવાદી હોય છે? આ પ્રશ્નના ઉત્તરમાં પ્રભુશ્રીને કહે છે કે છે કે-'गोयमा! किरियावाई' હે ગૌતમ! લેશ્યા

क्रियावादकारणीभूत यथावस्थितद्रव्यपर्यायात्मकार्थपरिच्छेदयुक्तत्वात्। अत्र खलु यानि सम्यग्दृष्टियोग्यस्थानानि अलेश्यत्वसम्यग्दर्शनज्ञानिनो असंज्ञोपयुक्तत्वावेदकत्वादीनि तानि सर्वाण्यपि क्रियावादे एव निक्षिप्यन्ते। यानि खलु मिथ्यादृष्टिस्थानानि मिथ्यात्वाज्ञानादीनि तानि शेष समवसरणत्रये निक्षिप्यन्ते 'नो अकिरियावाई' अलेश्या जीवा अक्रियावादिनो नो भवन्ति द्रव्यपर्यायात्मक वस्तु परिच्छेदयुक्तत्वादिति। 'नो अन्नाणियवाई'नो न वा अज्ञानिकवादिनः पूर्वोक्तयुक्तेरेव। 'नो वेणइयवाई' नो न वा वैनयिकवादिनो भवन्ति अलेश्या जीवा इति! 'कण्हपक्खियाणं भंते! जीवा किं किरियावाई पुच्छा' कृष्णपाक्षिकाः खलु

होते हैं। अयोगी और सिद्ध ये अलेश्य जीव हैं। ये क्रियावादी ही होते हैं। क्यों की इन में क्रियावाद के कारणीभूत यथावस्थित द्रव्य पर्यायात्मक पदार्थ के परिच्छेद से युक्तता है। यहां सम्यग्दृष्टि के योग्य अलेश्यत्व, सम्यग्दर्शन, ज्ञानी, नो संज्ञोपयुक्त और अवेदकत्व आदि स्थान हैं–सो इन सबका क्रियावाद में ही समावेश हुआ है तथा–जो मिथ्यादृष्टि के योग्य मिथ्यात्व, अज्ञान आदि स्थान हैं सो इनका शेष समवसरण त्रय में समावेश हुआ है। 'नो अकिरियावाई' अलेश्य जीव अक्रियावादी नहीं होते हैं। क्योंकि ये द्रव्य पर्यायात्मक वस्तु के ज्ञान से युक्त होते हैं। 'णो अन्नाणियवाई' इसी प्रकार वे अज्ञानिकवादी भी नहीं होते हैं। 'णो वेणइयवाई' वैनयिकवादी भी नहीं होते हैं। क्यों की ये द्रव्यपर्यायात्मक वस्तुके ज्ञानवाले होते हैं। 'कण्हपक्खियाणं भंते! जीवा किरियावाई पुच्छा' हे भदन्त! जो कृष्णपाक्षिक

વિનાના જીવો ક્રિયાવાદી હોય છે. અયોગી અને સિદ્ધ એ અલેશ્ય જીવ છે. એ ક્રિયાવાદી જ હોય છે કેમ કે તેઓ ક્રિયાવાદના કારણભૂત યથાવસ્થિતદ્રવ્ય પર્યાયાર્થિક પદાર્થના પરિચ્છેદથી યુક્ત હોય છે અહિયાં સમ્યગ્દૃષ્ટિને યોગ્ય અલેશ્યપણામાં, સમ્યક્દર્શનજ્ઞાની નોસંજ્ઞોપયુક્ત અને અવેદકપણુ વિગેરે સ્થાનો છે તે સઘળાનો ક્રિયાવાદમા જ સમાવેશ થાય છે. તથા જે મિથ્યાદૃષ્ટિને યોગ્ય મિથ્યાત્વ, અજ્ઞાન. વિગેરે સ્થાનો છે, તેનો સમાવેશ સમવરણત્રયમાં થયેલ છે

'नो अकिरियावाई' લેશ્યાવિનાના જીવો અક્રિયાવાદી હોતા નથી. કેમ કે તેઓ દ્રવ્ય પર્યાયાત્મક વસ્તુના જ્ઞાનથી યુક્ત હોય છે 'णो अन्नाणियवाई' એજ પ્રમાણે અજ્ઞાનવાદી પણ હોતા નથી. 'णो वेणइयवाइ' વૈનયિકવાદી પણ એ પ્રમાણેના હોતા નથી. કેમ કે તેઓ દ્રવ્ય પર્યાયાત્મક વસ્તુમાં જ્ઞાનવાળા હોય છે

'कण्हपक्खिया ण भंते! जीवा किं किरियावाई पुच्छा' હે ભગવન્ જે કૃષ્ણપાક્ષિક જીવો છે, તેઓ શું ક્રિયાવાદી હોય છે? અક્રિયાવાદી હોય છે?

